॥ आनंद रामायण पंचमः सर्गः अथवा रामरक्षा ॥

श्री शतकोटि रामचरितांतर्गत श्रीमदानंदरामायणे
पंचमः सर्गः प्रारंभः ।
विष्णुदास उवाच
श्री रामरक्षया प्रोक्तं कुशायह्यभिमंत्रणम् ।
कृतं तेनैव मुनिना गुरो तां मे प्रकाशय ॥ १॥

रामरक्षां वरां पुण्यां बालानां शांतिकारिणीम् ।
इति शिष्यवचः श्रुत्वा रामदासोऽप्रवीद्वचः ॥ २॥

श्रीरामदास उवाच
सम्यक् पृष्टं त्वया शिष्य रामरक्षाऽधुनोच्यते ।
या प्रोक्ता शंभुना पूर्वं स्कंदार्थं गिरिजां प्रति ॥ ३॥

श्री शिव उवाच
देव्यद्य स्कंदपुत्राय रामरक्षाभिमंत्रिणम् ।
कुरु तारकधाताय समर्थोऽयं भविष्यति ॥ ४॥

इत्युक्त्वा कथयामास रामरक्षां शिवः स्त्रियै ।
नमस्कृताय रामचंद्रं शुचिर्भूत्वा जितेन्द्रियैः ॥ ५॥

अथ ध्यानम् ।
वामे कोदंडदंडं निजकरकमले दक्षिणे बाणमेकं ।
पश्चाद्भागे च नित्यं दधतमभिमतं सासितूणीरभारम् ।
वामेऽवामे वसद्भ्यां सह मिलिततनुं जानकीलक्ष्मणाभ्याम् ।
श्यामं रामं भजेऽहं प्रणत जनमनः खेदविच्छेददक्षम् ॥ ६॥

ॐ अस्य श्री रामरक्षास्तोत्रमंत्रस्य बुधकौशिक ऋषिः ।
श्री रामचंद्रो देवता राम इति बीजम् ।
अनुष्टुप् छंदः । श्री राम प्रीत्यर्थे जपे विनियोगः॥

॥ ॐ॥

चरितं रघुनाथस्य शतकोटि प्रविस्तरम् ।
एकैकमक्षरं पुंसां महापातकनाशनम् ॥ ७॥

ध्यात्वा नीलोत्पलश्यामं रामं राजीवलोचनम् ।

जानकी - लक्ष्मणोपेतं जटामुकुटमंडितम् ॥ ८॥

सासितूण धनुर्बाण पाणिं नक्तंचरान्तकम् ।
स्वलीलया जगत्त्रातुमाविर्भूतमजं विभुम् ॥ ९॥

रामरक्षां पठेत्प्राज्ञः पापघ्नीं सर्वकामदाम् ।
शिरो मे राघवः पातु भालं दशरथात्मजः ॥१०॥

कौसल्येयो दृशौ पातु-विश्वामित्रप्रियः श्रुती ।
घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ॥११॥

जिह्वां विधानिधिः पातु कण्ठं भरतवंदितः ।
स्कंधौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ॥ १२॥

करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ।
पार्श्वे रघुवरः पातु कुक्षी इक्ष्वाकुनंदनः ॥ १३ ॥ (जादा चरण)
मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः ।
सुग्रीवेशः कटिं पातु सक्थिनी हनुमत्प्रभुः ॥ १४॥

उरू रघूत्तमः पातु गुह्यं रक्षः कुलान्तकृत् ।
जानुनी सेतुकृत् पातु जंघे दशमुखान्तकः ॥ १५॥

पादौ बिभीषणश्रीदः पातु रामोऽखिलं वपुः ।
एतां रामबलोपेतां रक्षां यः सुकृती पठेत्॥

स चिरायुः सुखी पुत्री विजयी विनयी भवेत् ॥ १६॥

पातालभूतलव्योम चारिणश्छद्मचारिणः ।
न द्रष्टुमपि शक्तास्ते रक्षितं रामनामभिः ॥ १७॥

रामेति रामभद्रेति रामचंद्रेति वा स्मरन् ।
नरो न लिप्यते पापैउर्भुक्तिं मुक्तिं च विन्दति ॥ १८॥

जगच्चैकमंत्रेण रामनाम्नाऽभिरक्षितम् ।
यः कण्ठे धरयेत्तस्य करस्थाः सर्वसिद्धयः ॥ १९॥

वज्रपंजरनामेदं यो रामकवचं पठेत् ।
अव्याहताज्ञः सर्वत्र लभते जयमंगलम् ॥ २०॥

आदिष्टवान् यथा स्वप्ने रामरक्षामिमां हरः ।
तथा लिखितवान् प्रातः प्रबुद्धो बुधकौशिकः ॥ २१॥

रामो दशरथिः शूरो लक्ष्मणाऽनुचरो बली॥

काकुत्स्थः पुरुषः पूर्णः कौसल्यानंदवर्धनः ॥ २२॥

वेदांतवेधो यज्ञेशः पुराणपुरुषोत्तमः ।
जानकीवल्लभः श्रीमानप्रमेय पराक्रमः ॥ २३॥

इत्येतानि जपेन्नित्यं यद्भक्तः श्रद्धयान्वितः ।
अश्वमेधधिकं पुण्यं लभते नात्रसंशयः ॥ २४॥

सन्नध्हः कवची खड्गी चायबाणधरो युवा ।
गच्छन् मनोरथोऽस्माकं रामः पातु सलक्ष्मणः ॥ २५॥

तरुणौ रूपसम्पन्नौ सुकुमारौ महाबलौ ।
पुण्डरीकविशालाक्षौ चीरकृष्णाजिनाम्बरौ ॥ २६॥

फलमूलाशनौ दांतौ तापसौ ब्रह्मचारिणौ ।
पुत्रौ दशरथस्यैतौ भ्रतरौ रामलक्ष्मणौ ॥ २७॥

धन्विनौ बद्धनिस्त्रिंशौ काकपक्षधरौ श्रुतौ ।
वरौ मां पथि रक्षेतां तावुबौ रामलक्ष्मणौ ॥ २८॥

शरण्यौ सर्वसत्त्वानां श्रेष्ठौ सर्व धनुष्मताम् ।
रक्षः कुलनिहन्तारौ त्रायेतां नो रघूत्तमौ ॥ २९॥

आत्तसज्जधनुषा विषुस्पृशा वक्षयाशुगनिषंग संगिनौ ।
रक्षणाय मम रामलक्ष्मणा वग्रतः पथि सदैव गच्छताम् ॥ ३०॥

आरामः कल्पवृक्षाणां विरामः सकलपदाम् ।
अभिरामस्त्रिलोकानं रामः श्रीमान्स नः प्रभुः ॥ ३१॥

रामाय रामभद्राय रामचंद्राय वेधसे ।
रघुनाथय नाथाय सीतयाः पतये नमः ॥ ३२॥

श्री राम रघुनंदन राम राम
श्री राम भरताग्रज राम राम
श्री राम रणकर्कश राम राम
श्री राम शरणं भव राम राम ॥ ३३॥

लोकाभिरामं रणरङ्गधीरं राजीवनेत्रं रघुवंशनाथं
कारुण्यरूपं करुणाकरं तं श्रीरामचंद्रं शरणं प्रपद्ये ॥ ३४॥

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वंदे रघुनन्दनम् ॥ ३५
गोष्पदीकृतवारीशं मशकीकृरराक्षसम् ।
रामायणमहामाला रत्नं वन्देऽनिलात्मजम् ॥ ३६॥

अघौध तिष्ठ दूरे त्वं रोगास्तिष्ठंतु दूरतः ।
वरीवर्ती सदाऽस्माकं हृदि रमो धनुर्धरः ॥ ३७॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूतमुख्यं श्रीरामदूतं शरणं प्रपद्ये ॥ ३८॥

राम राम तव पाद पंकजं चिन्तयामि भवबंधमुक्तये ।
वंदितं सुरनरेंद्रमौलिभिर्ध्यायितं मनसि योगिभिः सदा ॥ ३७॥

रामं लक्षमणपूर्वजं रघुवरं सीतापतिं सुंदरम् ।
काकुत्स्यं करुणार्णवं गुणनिधिं विप्रप्रियं धर्र्मिकम् ।
राजेन्द्रं सत्यसंधं दशरथनयं शामलं शान्तिमूर्तिम् ।
वंदे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥ ४०॥

एतानि रामनामानी प्रातरुत्थाय यः पठेत् ।
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ॥ ४१॥

माता रामो मत्पिता रामचंद्रः स्वामी रामो मत्सखा रामचंद्रः ।
सर्वस्वं मे रामचंद्रो दयालुर्नान्यं जाने नैव जाने न जाने ॥ ४२॥

श्रीरामनामामृत मंत्रबीज संजीवनी चेन्मनसि प्रविष्टा ।
हालाहलं वा प्रलयानलं वा मृत्योर्मुखं वा विशतां कुतो भीः ॥ ४३॥

श्रीशब्दपूर्वं जयशब्दमध्यं जयद्वयनापि पुनः प्रयुक्तम् ।
त्रिःसप्तकृत्वो रघुनाथ नाम जपान्निहन्या द्विजकोटिहायाः ॥ ४४॥

एवं गिरीन्द्रजे प्रोक्ता रामरक्षा मया तव ।
मयोपदिष्टा या स्वप्ने विश्वामित्राय वै पुरा ॥ ४५॥

रामदास उवाच
एवं शिवेनोपदिष्टं श्रुत्वा देवी गिरीन्द्रजा ।
रामरक्षां पठित्वा सा स्कंदं समभिमंत्रयत् ॥ ४६॥

तस्यास्तेजोबलेनैव जघान तारकासुरम् ।
षडाननः क्षणदेव कृतकृत्योऽभवत् पुरा ॥ ४७॥

सैवेयं रामरक्षास्ते मयाख्याताऽतिपुण्यदा ।
यस्याः श्रवणमत्रेण कस्यापि न भयं भवेत् ॥ ४८॥

वाल्मिकीनाऽनयापूर्वं कुशायह्यभिशेचनम् ।
कृतं बालग्रहाणां च शांत्यर्थं सा मयोदिता ॥ ४९॥

बालानां ग्रहशांत्यर्थं जपनीया निरंतरम् ।
रामरक्षा महाश्रेष्ठा महाघौघ निवारिणी ॥ ५०॥

नास्याः परतरं स्तोत्रं नास्याः परतरो जपः ।
नास्याः परतरं किंचित्सत्यं सत्यं वदाम्यहम् ॥ ५१॥

॥ इति श्री शतकोटि रामचरितांतर्गत श्रीमदानन्दरामायणे
वाल्मीकीये जन्मकाण्डे रामरक्षाकथनं नाम पञ्चमः सर्गः ॥

( संदर्भ : आनंद रामायण - ( जन्मकाण्ड - ५ वा सर्ग )
भटिया शालीय ठक्कर गोवर्धनदास लक्ष्मीदास
यांनी मुंबई येथे जगदीश्वर छापखान्यात
लोकहितार्थ छापवून प्रसिद्ध केला
शके १८०८ सन् १८८७
छापील पोथी : ग्रंथालय ग्रंथ क्र १०३ / १४५ )
इ. स. १५ वे शतक